क्रियैव कर्त्तव्या, तथा मुनीन्द्रवचनमप्येवं व्यवस्थितं, यत उक्तम्—"चेइयकुलगणसंघे आयरियाणं च पवयण सुए य । सव्वे-सुवि तेण कयं तवसंजममुज्जमंतेणं ॥ १ ॥" इतश्चैतदेवमङ्गीकर्तव्यम्—यस्मात् तीर्थकरगणधरैः क्रियाविकलानां ज्ञानमपि विफलमेवोक्तं, तथा चागमः—"सुबहुंपि सुयमहीयं किं काही चरणविप्पहीणस्स ? । अंधस्स जह पलित्ता दीवसयसहस्सको-डीवि ॥ १ ॥" दृशिक्रियाविकलत्वात् तस्येत्यभिप्रायः । एवं तावत् क्षायोपशमिकं चारित्रमङ्गीकृत्योक्तं, चारित्रं क्रिये-त्यनर्थान्तरं, क्षायिकमप्यङ्गीकृत्य प्रकृष्टफलसाधकत्वं तस्यैव विज्ञेयं, यस्मादर्हतोऽपि भगवतः समुपन्नकेवलज्ञानस्यापि न तावत् मुक्त्यवाप्तिः सञ्जायते यावदखिलकर्मेन्धनानलभूता ह्रस्वपञ्चाक्षरोद्गिरणमात्रकालावस्थायिनी सर्वसंवररूपा चारित्रक्रिया नावाप्तेति, तस्मात् क्रियैव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणमिति य उपदेशः—क्रियाप्राधान्यख्यापनपरः स नयो नाम क्रियानय इत्यर्थः । अयं च नामादौ षड्विधे प्रत्याख्याने क्रियारूपमेव प्रत्याख्यानमिच्छति, तदात्मकत्वादस्य, ज्ञानं तु तदर्थमुपादीयमानत्वादप्रधानत्वान्नेच्छति गुणभूतं चेच्छतीति गाथार्थः । उक्तः क्रियानयः, इत्थं ज्ञानक्रियानय-स्वरूपं श्रुत्वाऽविदिततदभिप्रायो विनेयः संशयापन्नः सन्नाह—किमत्र तत्त्वं ?, पक्षद्वयेऽपि युक्तिसम्भवाद्, आचार्यः पुन-राह—'सव्वेसिं' गाहा, अथवा ज्ञानक्रियानयमतं प्रत्येकमभिधायाधुना स्थितपक्षमुपदर्शयन्नाह—'सव्वेसिंपि' गाहा व्याख्या—'सर्वेषा'मिति मूलनयानां अपिशब्दात् तद्भेदानां च नयानां—द्रव्यास्तिकादीनां बहुविधवक्तव्यतां—सामान्यमेव विशेषा

१ चैत्यकुलगणसङ्घे आचार्येषु च प्रवचने श्रुते च । सर्वेष्वपि तेन कृतं तपःसंयमयोरुद्यच्छता ॥ १ ॥ २ सुबह्वपि श्रुतमधीतं किं करिष्यति चरण-विप्रहीणस्य । अन्धस्य यथा प्रदीप्ता दीपशतसहस्रकोट्यपि ॥ १ ॥

एव उभयमेवानपेक्षं इत्यादिरूपां अथवा नामादीनां नयानां कः कं साधुमिच्छतीत्यादिरूपां निशम्य—श्रुत्वा तत सर्वनयविशुद्धं—सर्वनयसम्मतं वचनं यच्चरणगुणस्थितः साधुः, यस्मात् सर्वे नया एव भावनिक्षेपमिच्छन्तीति गाथार्थः ॥ १६२३ ॥ इति शिष्यहितायां प्रत्याख्यानविवरणं समाप्तमिति । व्याख्यायाध्ययनमिदं यदवाप्तमिह शुभं मया पुण्यम् । शुद्धं प्रत्याख्यानं लभतां भव्यो जनस्तेन ॥ १ ॥ समाप्ता चेयं शिष्यहितानामावश्यकटीका ॥ कृतिः सिताम्बराचार्यजिनभटनिगदानुसारिणो विद्याधरकुलतिलकाचार्यजिनदत्तशिष्यस्य धर्मतो जाइणीमहत्तरासूनोरल्पमतेराचार्यहरिभद्रस्य ।

यदिहोत्सूत्रमज्ञानाद्, व्याख्यातं तद् बहुश्रुतैः । क्षन्तव्यं कस्य सम्मोहः, छद्मस्थस्य न जायते ? ॥ १ ॥
यदर्जितं विरच(मंच)यता सुबोध्यां,पुण्यं मयाऽऽवश्यकशास्त्रटीकाम् ।भवे भवे तेन ममैवमेवं,भूयाज्जिनोक्तानुमते प्रयासः ॥२॥
अन्यच्च सन्त्यज्य समस्तसत्त्वा, मात्सर्यदुःखं भववीजभूतम् । सुखात्मकं मुक्तिपदावहं च, सर्वत्र माध्यस्थमवाप्नुवन्तु ॥ ३ ॥

समाप्ता चेयमावश्यकटीका । द्वाविंशतिः सहस्राणि, प्रत्येकाक्षरगणनया(संख्यया) । अनुष्टुप्छन्दसा मानमस्या उद्देशतः कृतम् ॥ १ ॥ अंकतोऽपि ग्रन्थाग्रं २२०००

इत्याचार्यवर्यश्रीमद्धरिभद्रसूरिसूत्रितसंक्षिप्तविवृतियुतं
श्रुतकेवलिश्रीमद्भद्रबाहुस्वामिसूत्रितनिर्युक्तिमूल-
भाष्यभाष्ययुक्तं श्रीमदावश्यकसूत्रं समाप्तं ॥